निखातो गमनागमनं स्तम्भयति । दिव्यानि[१] सर्वाणि स्तम्भयति । तस्यैवोदरे निक्षिप्तो भूर्जे वस्त्रे [वा] लिखितो मन्त्रराजः संवेष्ठितो मदनेन शीतवारिणा परिपूर्णाभिनव-कलशे निक्षिप्तो दिव्यानि स्तम्भयति । उत्तरीयाञ्चले ग्रन्थिं कृत्वा मन्त्रमभिस्मरतो मार्गे चौरादीन् स्तम्भयति । अरण्ये [२]शृङ्गिणां(णः) दंष्ट्रिणाञ्च(णश्च) स्तम्भयति । सप्ताभिमन्त्रितं लोष्टं निक्षिपेत्, जले जलचराणां [३]दंष्ट्राबन्धं करोति । श्मशानचेलके परसैन्यप्रधानपुरुषाणां नाम विदर्भितं मन्त्रं विश्ववज्रमध्ये संलिख्य विश्ववज्रस्य बहिर्धा अष्टौ 'लं'कारान् संलिख्य बाह्ये माहेन्द्रमण्डलयुगं लिखेत् । विश्ववज्रवि-भूषितं मदनमयगणपतिगर्भनिहितं मन्त्रं परसैन्यसीमासन्धौ निखातं सैन्यं स्तम्भयति । प्रणवोभयसंपुटितो मन्त्रः [४]थकारयुगले[न] वेष्ठितो [५]लंकाराष्टकशोभितो माहेन्द्र-मण्डलाक्रान्तः विश्ववज्रैरुपशोभितो वाल्मीकमृत्तिकया कृतगणपतिगर्भे निक्षिप्तः श्मशानहण्डिकायां प्रक्षिप्य श्मशाने निखातः परसैन्यं स्तम्भयति । तुषहोमेन च नगरदाहे अग्निमुखो भूत्वा अनेन मन्त्रेणाभिमन्त्र्य सप्तजलाञ्जलिं क्षिपेत् । यस्य गृहस्य रक्षणमिच्छति तद् गृहं रक्षति । भस्मना कण्ठबद्धेन च्छर्दिनिवारणम् । कनिष्ठिकाङ्गुल्यग्रं दृढं निष्पीड्य मन्त्रमुच्चारयेत्, हिक्कां स्तम्भयति । भस्मनाभि-मन्त्रितेन चक्षुः स्तम्भयति । विस्फोटकाद्युपद्रवे चीरिकामभिलिख्य यस्य गृहद्वारे स्थापयेत् तस्य गृहे विस्फोटकाद्युपद्रवं निवारयति । मत्स्यमांसमद्यकुल्माषादिभि-र्ग्रामस्य बहिर्भागे महाबलिर्दातव्यः । पञ्चसमिद्भिः पञ्चव्रीहिविशेषैर्घृताक्तैर्ग्रामस्य मध्ये शान्तिकं कुण्डं कृत्वा होमः कर्तव्यः । सर्वमारी(र्या)द्युपद्रवान् स्तम्भयति । यस्य कस्यचिद् ग्रामादिकं दीयमानं जापमात्रेण निवारयति । सततं जपन् देवासुर-नरनागैरधृष्यो भवति । भगवतः श्रीसम्बुद्धभट्टारकस्याभिसम्बोधिकाले चतुर्मारपरा-जयार्थमूर्णाकोशाद्विनिःसृतोऽयं मन्त्रराजः, तेनोर्णामणिरिति प्रसिद्धः । [६]पथेरिकाम-भिमन्त्र्य सर्पाणामुच्चाटनं करोति । गृहभित्तौ खटिकामभिमन्त्र्य लिखेत् । अथवा शिलापट्टं किणिकयोत्कृत्य मन्त्रं निखनेत् । दुष्टमृगाणां सर्पाणाञ्च गृहे ग्रामे नगरे वा

---

१. भो०- རྟག་པར་བྱེད་པ།
२. गवयादीन्- इत्यधिकः पाठः- भो० ।
३. मुख- भो० ।
४. ठकार- भो० ।
५. बाह्ये लं- भो० ।
६. भो०- གསེག་མ།

यावदिच्छं दंष्ट्राबन्धं करोति। उद्धृतेन मोक्षः । असाधितोऽप्ययं मन्त्रः सर्वकर्मकरः । [१]पथेलिकादिकमभिमन्त्र्य क्षिपेत् । सर्वद्रंष्ट्रिणां द्रंष्ट्राबन्धं करोति । माहेन्द्रमण्डला-क्रान्तं(न्ताः) विश्ववज्रमध्ये साध्यनामसहितं(ताः) सर्वत्र मन्त्रा लिखनीयाः । सप्ता-भिमन्त्रितं चितिकाष्ठकीलकं द्वारपटले गोपितं सर्वेषां वृत्तिजीविनां वृत्तिं स्तम्भयति । उद्धृते मोक्षः ॥ ३ ॥

**ॐ निहि निच्छले अभयंकरि । एलु वेलु चुलेलु[२] । शिलाय [३]ड इ ज़ ह ये । पट्ट इज़ट्ट । एपेलु आगसपथे[४] [५]केरते । [६]इ अ तु मुधारि मधरि खिन्नि खिल्ल मोहनि थिभि [७]ज़कारं जहि थाकारो णिहि ठः ठः स्वाहा ॥**

अयं मन्त्रराजः सर्वाणि पूर्वोक्तकर्माणि कारयत्यसाधितोऽपि यच्चान्यदपि कार्यं मन्त्रिणाऽभिप्रेतं तत्सर्वं करोत्यसंदिग्धम् । लवणराजिकाहोमेन परसैन्य-विद्रावणं करोति । तुषहोमेन वा ॥ ४ ॥

**[८]ॐ अम्शसिम्शकस्या सुजोमे फेड एदुस्यासु स्वाहा । ॐ अमवा शिमभा कप्प सुजो मे फिदुप्पासु ॥**

असाधितोऽप्ययं मन्त्रराजः सततं जपतां सर्वप्रतिभयं निवारयति । [९]सप्ताभिमन्त्रितवज्रोदकेन तिलकं कृत्वा सर्वप्रत्यर्थिकानां मोहनं करोति कुपितं प्रसादयति । बद्धः सततं जपन् बन्धनान्मुच्यते । व्यसनप्राप्तोऽभयं लभते ॥ ५ ॥

**एषोत्थितो हुलु हुलु ज्वालाजिह्वे [१०]हुलु हुलु यत्रैवोत्थितो हुलु हुलु तत्रैव प्रतिगच्छतु हुलु हुलु स्वाहा ॥**

---

१. भो०- ཕ་ཐེག་མ་།
२. नास्ति- क. ख. ग. ।
३. प उ इ ज ह पेलु- क. ख. ग. ।
४. पंथ- ग. ।
५. 'के' नास्ति- क. ख. ग. ।
६. ह अ त्त धरि खिलि मोड़ि थम्भि- क. ख. ग. ।
७. जकारे जाहि ठकारे हि ठः ठः ठः - क. ख. ग. ।
८. 'ॐ----स्वाहा' नास्ति- क. ख. ग. ।
९. 'सप्ताभिमन्त्रित' नास्ति- भो० ।
१०. कुलु कुलु- क. ख. ग. ।

एष मन्त्रराजः सर्वकलिकलहविवादोपसर्गविधुरेषु जप्तः शान्तिं करोति । तुषहोमेन च सर्वशान्तिर्भवति । यथालब्धकुसुमानि मन्त्रमुच्चार्य उदके प्रवाहयेत् । सर्वशान्तिं विजयञ्च प्राप्नोति न संशयः । नगरदाहे अग्निसंमुखं स्थित्वा सप्ताञ्जलि-मभिमन्त्र्य क्षिपेत् । यस्य गृहस्य रक्षितुकामस्तस्य रक्षां करोति । अग्निदग्धस्याग्निमु-त्तारयति द्विपदचतुष्पदानामनेकतुषहोमेन शान्तिर्भवति ॥ ६ ॥

**ॐ पद्मे पद्माक्षि पद्मसुभगे [1]फुर फुर फुर ॥**

अयं मन्त्रराजः भस्मनाभिमन्त्र्य वेष्ठितः चक्षुषोर्मुद्रणं करोति[2] । उन्मार्जना-च्चक्षुः स्तम्भयति । सप्ताभिमन्त्रितेन चक्षुषा कुपितं पश्यन् प्रसादयति । सप्ताभि-मन्त्रितेन जलेन मुखं प्रक्षालयेत्, सर्वजनप्रियो भवति । भित्तौ खटिकयाऽभिलिख्य नामविदर्भितो मन्त्रः सर्वाक्षिरोगं शमयति । चक्षुर्द्वयं सप्ताभिमन्त्रितं कृत्वा एकमनसा विजने स्थितः(तस्य) पुरुषस्य यदा वामचक्षुः स्फुरति तदा यथाचिन्तितकार्यसिद्धिं निवेदयति । दक्षिणं स्फुरति अशुभं प्रतिपादयति ॥ ७ ॥

**ॐ मोचनि मोचय मोक्षणि मोक्षय जीवं वरदे स्वाहा ॥**

अभिमन्त्रिततैलेन योनिप्रलेपेन गुर्विणी सुखेन प्रसूयते । बद्धाभिमुखो भूत्वाभिमन्त्रितसप्तजलाञ्जलिं क्षिपेत् त्रिसंध्यं बद्धो बन्धनाद्विमुच्यते । कुङ्कुमेन गोरोचनया वा भूर्जेऽभिलिख्य शिरसि बन्धनाद्बन्धनं मोचयति[3] ॥ ८ ॥

**ॐ हरिमर्कटनाम सहस्रबाहुर्देवदत्तं बन्धनान्मोचय स्वाहा ॥**

खटिका[म]भिमन्त्र्य संलिख्य भूमितले पुनः पुनर्भूयो विलोमं प्रोञ्छयेत् । बद्धो बन्धनान्मुच्यते । [4]मन्त्रमभिलिख्य भूर्जपत्रिकां वा शिरसि धारयन् बद्धो बन्धनान्मुच्यते ॥ ९ ॥

**ॐ तारणी( णि ) तारय मोचनी ( नि ) मोचय मोक्षणि मोक्षय जीवं वरदे स्वाहा ॥**

---

१. फुः पद्मे पद्माक्षि पद्मसुभगे फुः स्वाहा- भो० ।
२. 'स्तम्भयति' अधिकः पाठः- भो० ।
३. इतः परं 'सततं जपाद् बन्धनान्मुक्तो भवति' इत्यधिकः पाठः- भो० ।
४. 'नामसहितं मन्त्र'- भो० ।

अयं मन्त्रराजः सुजप्तः सर्वकर्मकरः सप्ताभिमन्त्रिततैलेन योनिं प्रलेपयेत्, गुर्विणी सुखेन प्रसूयते। सप्ताभिमन्त्रितचुलुकोदकत्रयं पीत्वा गूढगर्भा सुखेन प्रसूयते। सततं जपन् आत्मानं परं वा बन्धनान्मोचयति । कण्ठे बाहौ [1]पत्रि(ट्टि)कां धारयन् [2]बन्धनान्मुच्यते ॥ १० ॥

**ॐ तारे तुतारे तुरे मोक्षय जीवं वरदे स्वाहा ॥**

अयं मन्त्रराजः पूर्वोक्तसर्वाणि कर्माणि करोति । कुङ्कुमेन भूर्जपत्रे यस्य नामविदर्भितं मन्त्रमभिलिख्य मदनेन वेष्टयित्वा सुगन्धोदकपरिपूर्णाभिनवकलशोदरे प्रक्षिप्य सुगन्धिकुसुमादिना त्रिसन्ध्यं पूजयेत्, तस्य सर्वकलिकलहविवादेषु विजयो भवति ॥ ११ ॥

**एरण्डस्य वने काकः गंगातीरमुपस्थितः ।**
**पिबतु दूतः पानीयं विशल्या भवतु गुर्विणी[3] ॥**

सप्ताभिमन्त्रितोदकचुलुकत्रयं आगतदूतं पाययेत्, गुर्विणी सुखं प्रसूयते॥ १२ ॥

**ॐ अमरिणी ( राणि ) जीवन्तीये स्वाहा ॥**

अयं मन्त्रराजः सुजप्तः सर्वकर्मकरः । अभिमन्त्रितोदकपानात् विस्फोटका न भवन्ति । दुष्टलूतामर्कटिकाविसर्पिकादिषु व्रणेषु हरिद्राहरीतकीकुष्ठादिकं परिजप्य लेपयेत् । स्वस्थो भवति । सर्वव्याध्युपद्रवे गण्डकबन्धात् स्वस्थो भवति । सततं जपन् गतायुः पुनः शतायुर्भवति । तिलघृतहोमेन सर्वत्र शान्तिं जनयति। अभि-मन्त्रितभैषज्यपानात् सर्वव्याधिभ्यः परिमुच्यते । अनेन मन्त्रेण शतधौतघृतं कृत्वा व्याध्यङ्गं लेपयेत् स्वस्थो भवति । शिरःशूले तैलमभिमन्त्र्य शिरोमर्दनात् स्वस्थो भवति । दुष्टव्रणेषु उदकं च्छाडयेत् स्वस्थो भवति । प्लीहोदरे वार्ताकुशस्त्रेण च्छेदयेत् । प्लीहा छिन्ना भवति । निर्गुण्डी निम्बमूलं शिखिपिच्छमेकत्र संयोज्याष्ट-शताभिमन्त्रितं कृत्वा धूपं दद्यादेकाहिकद्व्याहिकत्र्याहिकचातुर्थिकादिज्वरान्नाशयति । भूतप्रेतपिशाचब्रह्मराक्षसादीनपि नाशयति । मृतवत्सायाः स्त्रियः अष्टशताभिमन्त्रित-

---

१. भो०- སྤྱང་པ།

२. सर्वभयाद्रक्षति- भो० ।

३. 'स्वाहा'- भो० ।

कलशेन स्नापनाज्जीववत्सा भवति । कण्ठे बाहौ वा मन्त्रं भूर्जे लिखित्वा धारयन्त्या गर्भरक्षा भवति । संग्रामे अनुस्मरन् मन्त्रं विजयं लभते । उन्मार्जनात् सर्वव्याधिमपनयति ॥ १३ ॥

**ॐ पादचालने स्वाहा ॥**

अयं मन्त्रराजः प्रसाधितः पूर्वसेवाविधानात् सर्वकर्मकरः । विस्फोटकभयेषु अभिमन्त्रितजलपानात् विस्फोटका न भवन्ति[१] । सर्वेषूपद्रवेषु महारक्षेयं घृताक्ततिलहोमेन। काकपक्षं हस्ते गृहीत्वा अयुतं जप्त्वा यस्य गृहपटले निक्षिपेत् तमुच्चाटयति ॥ १४ ॥

**ॐ पिशाचि पर्णशबरि सर्वोपद्रवनाशनि स्वाहा ॥**

द्विपदचतुष्पदानां सर्वोपद्रवनाशनीयं महाविद्या । असाधिताऽपि सर्वकर्म करोति । होमेन जापेन ध्यानेन गण्डकेनाभिमन्त्रितोदकपानादुन्मार्जनाद्व्याधीनपनयति । कुङ्कुमेन भूर्जपत्रे मन्त्रमभिलिख्य कण्ठे बाहौ [वा]धारयन् व्यवहारे जयं लभेत् । चातुर्थिकादिविषमज्वरेभ्यो मुच्यते । राक्षसादिभयमपहरति । कलिकलहविवादे जयमासादयति । व्याघ्रमकरमहोरगचौरादिभिरधृष्यो भवति । सततजापात् सर्वजनप्रियो भवति ॥ १५ ॥

**ॐ अद्य तृतीया अमुकस्य चक्षुः स्तम्भय ठः ठः स्वाहा ॥**

यस्यां तिथौ चक्षुर्व्यथते सा लेखनीया खटिकया भित्तौ फलके वा [२]ठकारेण त्रिपुटीकर्तव्यं चक्षुर्व्यथां शमयति ॥ १६ ॥

**ॐ चण्डमहारोषण हूँ फट् ॥**

अयं मन्त्रराजः सकृदुच्चारितः सर्वपापान्निर्दहति । सर्वत्र रक्षामावहति । [३]माषादिभिस्ताडयन् भूतादि[४]भयमपहरति । खटिकया शरावेऽभिलिख्य द्वारे

१. इतः परं 'भूर्जे पत्रे वा लिखित्वा शिरसि धारयेत् विस्फोटका न भवन्ति'; इत्यधिकः पाठः- भो० ।
२. एकारेण- भो० ।
३. सर्षपादि- भो० ।
४. भूतादिग्रह- भो० ।

लम्बापयेत् । अभिनवप्रसूतबालानां रक्षां करोति । मदनेन पुत्तलिकां कृत्वा चतुरङ्गुलप्रमाणां तस्या हृदये साध्यंनामसहितं मन्त्रमभिलिख्य प्रक्षिपेत् । कण्टकेन तस्या मुखं कीलयेत् वादे प्रतिवादिनो मुखं कीलितं भवति । पादौ कीलयेत् गतिं स्तम्भयति । हृदयं कीलयेत् कोपं स्तम्भयति । मनुष्यजंघास्थिकीलकेन लोहकेन वा नाम गृहीत्वा यान्यङ्गानि कीलयेत् तानि तस्य नश्यन्ति । अरिद्वारे निखनेत् उच्चाटयति । अभिमन्त्रितश्मशानभस्मना द्वारपटले निक्षिप्तेनोच्चाटयति । खड्गमभिमन्त्र्य संग्रामे प्रविशेत् जयमासादयति । यस्मिन् कार्ये समुत्पन्ने बलिमुपहरेत् तत्सिध्यति, यदिच्छति मन्त्री शुभमशुभं वा तत्सर्वं करोति जापमात्रेण ॥ १७ ॥

**ॐ काशे स्पन्द कुशे स्पन्द स्पन्द त्वं शून्यवेश्मनि ।**
**मम त्वं तथा [ स्पन्द यथा ] स्पन्दसि वज्रिणः ॥ स्वाहा ॥**

स्पन्दमाने चक्षुरुन्मार्जनाच्छान्तिर्भवति ॥ १८ ॥

**ॐ जम्भे मोहे हृदयावर्तनि हूँ फट् स्वाहा ॥**

अनेन मन्त्रराजेन काकरुदिते प्रातःसमये सप्ताभिमन्त्रितजलेन मुखप्रक्षालनात् सर्वजनप्रियो भवति । श्वेतपद्मसूत्रेण गोघृतेन पुष्ये कज्जलं गृहीत्वा अष्टशताभिमन्त्रितं कर्तव्यं तेनाञ्जितनयनो मनोहरः सर्वप्रमदानाम् । अधो पुष्पिकामूले श्रीखण्डमेकत्र पुष्ये योजयेत् । अष्टशताभिमन्त्रितं तिलकं तेन कारयेत् कुपितः प्रभुः प्रसीदति । कलिकलहविवादेषु विजयी भवति । विधिवत् सततं जपन् पुरःक्षोभं जनयति ॥ १९ ॥

**ॐ स्तम्भनि स्तम्भय जम्भनि जम्भय मोहनि मोहय रक्षणि रक्षय मां वरदे सिद्धलोचनि स्वाहा ॥**

बुद्धलोचनाहृदयं सर्वभयं व्यपोहति ॥ २० ॥

इति सिद्धैकवीरमहातन्त्रराजे प्रथमः पटलः ॥

## द्वितीयः पटलः

**सुबौद्धस्य प्रबुद्धस्य शिष्यस्य गुणशालिनः ।**
**गुरुभक्तस्य दक्षस्य तन्त्रराजं प्रदर्शयेत् ॥**

**ॐ नमो विमलचन्द्राय देवपुत्राय ।**

**सत्येन ध्रियते लोकः सत्येन परिगृह्यते ।**
**सत्येन धर्मः ( र्मे ) स्थितो लोकः सत्यं ब्रह्म सनातनः ॥**

**सत्यं बुद्धश्च धर्मश्च संघश्च गुणसागरः ।**
**अनेन सत्यवाक्येन क्षिप्रमाविश दर्पणे ॥**

**तद्यथा ॐ सर सर सिरि सिरि सुरु सुरु मेरुमन्दरप्रतीकाश आविश आविश कैलाशकूटपुत्राय नमः स्वाहा ॥**

**यन्मया चिन्तितं कार्यं तत्सर्वं ब्रूहि तत्त्वतः ।**
**आत्मार्थं वा परार्थं वा शुभं वा यदि वाऽशुभम् ॥**

प्रभाते शुचिस्थाने मण्डलकमुपलिप्य कलशं स्थापयित्वा [१]विमलचन्द्रदेवपुत्रस्य पूजामुदारां कृत्वा दर्पणमभिमन्त्र्य सुस्नातः सुधौतवस्त्रावृतं श्वेतचन्दनलिप्ताङ्गं सुगन्धिकुसुमावृतकण्ठं दारकं दारिकां वा अविनष्टां ग्राम्यधर्मे प्रदर्शयेत् । यथाचिन्तितकार्यमवितथमावेदयति । सायाह्ने शिरःस्थाने मण्डलकमुपलिप्य भगवतो विमलचन्द्रस्य देवपुत्रस्य महतीं पूजां कृत्वा अष्टोत्तरशतमावर्त्य मौनेन स्वपेत् । यथाचिन्तितकार्यं शुभाशुभमावेदयति । सततं जपतां त्रिलोकचरितानि वस्तूनि कथयति ॥ २० ॥

**ॐ श्रवणपिशाचिनि मुण्डे स्वाहा ॥**

---

१. नास्ति- क. ख. ग. ।

विभीतकवृक्षस्य वटवृक्षस्य वा अधस्तात् स्थितो मौनी लक्षमेकं जपेत्, सिद्धो भवति । लोकत्रयचरितं [१]कर्णे कथयति । अथवा स्नातः शुचिवस्त्रावृतः प्रच्छन्ने अयुतमेकं जपेत् । ततः सिद्धो भवति । रात्रौ कुष्टमष्टशताभिमन्त्रितं कृत्वा स्वमुखं पादौ [च प्रक्षाल्य] चार्यभ्यां (चान्येभ्यो) नालपन् स्वपेत् । स्वप्ने शुभाशुभं कथयति॥ २१ ॥

**ॐ नमः सप्तानां सम्यक्सम्बुद्धकोटीनां तद्यथा ॐ चले चुले चुन्दे स्वाहा । वीर्यसत्यवादिनि वरदे कथय स्वाहा ॥**

पूर्वोक्तविधानेनादर्शे शंखे[२] प्रदीपे जलभाजने वा कथयति । अष्टोत्तरशताभिमन्त्रितजलेन मुखं प्रक्षाल्य मौनी स्वप्रान्स्वप्ने शुभाशुभं वा पश्यति ॥ २२ ॥

**ॐ मुचिलि स्वाहा । मोहनि स्वाहा । दन्तिलि स्वाहा ॥**

मन्त्रोऽयमयुतजप्तः सिद्धो भवति । आर्यावलोकितेश्वरस्य भगवतो महतीं पूजां कृत्वा अष्टोत्तरशताभिमन्त्रितजलेन मुखं प्रक्षाल्य कार्यं मनसि कृत्वा जपन् अनालपन् [३]सुप्तः स्वरूपेण भगवन्तं पश्यति । शुभाशुभञ्च स्वप्नमुपलभते ॥ २३ ॥

**ॐ प्रज्वल हूँ फट् ॥**

हृदयमिदं लोकनाथस्य भगवतो नियुतमेकं जप्तेन सिध्यति । पूर्वोक्तविधानेन शुभाशुभं स्वप्ने कथयति ॥ २४ ॥

**ॐ नमः समन्तबुद्धानां अप्रतिहतशासनानाम् । तद्यथा— ॐ कुमाररूपिणं दर्शय आत्मानं विभूषितमेतदपरविभूतिं श्रितं समुद्भावय स्वप्नं निवेदय यथाभूतं हूँ हूँ फट् फट्[४] स्वाहा ॥**

---

१. पुनः- भो० ।
२. खड्गे- भो० ।
३. नास्ति- क. ख. ग. ।
४. नास्ति- क. ख. ग. ।

मञ्जुश्रीभट्टारकस्य पटस्य प्रतिमाया वा अग्रतः सधातुके चैत्ये वा यथाविभवतः पूजां कृत्वा सप्तशतिको जापः कर्तव्यः । स्वयं स्वप्नमुपलभते परं च दर्शयेत् ॥ २५ ॥

**ॐ कर्णपिशाचि कर्णे मे कथय हूँ फट् ॥**

पिशाचतरोरधस्तात् त्रैलोक्यविजयसमाधिस्थस्तत्रैव वसन् मौनी [१]मत्स्यमांस-जम्बुलिकामभिमन्त्र्य तस्य बलिमुपसंहृत्य त्रिसन्ध्यं मन्त्रमावर्तयेत् । प्रथमे दिवसे निमित्तं दर्शयति । पश्चादागच्छति सिद्धो भवति । ततः प्रभृतिभुवनत्रयचरितं कर्णे कथयति । त्रिसप्ताहाद् ब्रह्मघ्नस्यापि सिध्यति ॥ २६ ॥

**ॐ चतुर्भुज [२]षणमुखविकृतानन कर्णपिशाचीमाकर्षय हूँ फट् ॥**

श्मशाने यमान्तकपटस्याग्रतो जप्तव्यं [३]त्रिसप्ताहात् कर्णपिशाची सिद्ध्यति ॥ २७ ॥

**ॐ बुद्ध चुरुमा चुरुके स्वाहा ॥**

सधातुके चैत्यबुद्धभट्टारकस्य पुरस्तात् पूर्वसेवा(वया) अयुतं जप्त्वा पश्चाद् यथाविभवतः पूजां कृत्वा शयनवेलायां अष्टौशतानि जप्त्वा का मे जातिरासीत् का पुनर्भविष्यतीति मनसा विचिन्त्य स्वपेत् । स्वप्ने भूतभविष्यद् जातिमुपलभते न सन्देहः । यदि षण्मासाभ्यन्तरे मृत्युर्भविष्यति तदा ग्रीवारहितमात्मानं परं वा स्वप्ने पश्यति । एवं दर्पणमभिमन्त्र्य पश्यन् दारकं दारिकां वा यं ग्रीवारहितं प्रेक्षते तस्य षण्मासाभ्यन्तरे मृत्युः । श्रोताञ्जनं श्वेतागस्त्यतरुमूलं च वर्तिं कृत्वा चक्षुरञ्जयेत् अष्ट-शतमभिमन्त्रितेन । येषां षण्मासाभ्यन्तरे मृत्युर्भविष्यति तान् सर्वान् द्विपदचतुष्पदा-दीन् शिरसा विना प्रत्यक्षः पश्यति ॥ २८ ॥

**ॐ स्वप्नविलोकिनी( नि ) सिद्धलोचने स्वप्नं मे कथय स्वाहा ॥**

---

१. मत्स्यमांसनरमांसजम्बुतिका- भो० ।
२. 'चतुर्मुख' अधिकः पाठः- भो० ।
३. सप्ताहात्- भो० ।

अयं मन्त्रराजः पूर्वोक्तविधानानि सर्वाणि करोति ॥ २९ ॥

**ॐ अदिति देवदत्तं मे देहि ददापय स्वाहा ॥**

जलमध्यगतो यां [यां] कन्यामुद्दिश्य जपति तस्यैव दीयते । अक्षरलक्ष-जप्यकार्यं प्रियङ्गुकुसुमहोमेन वा पलाशकुसुमानां लक्षहोमेन महतीं श्रियमासादयति। क्षीरवृक्षसमिद्भिर्निशायां होमेन यं ग्राममुद्दिश्य जपेत्तं लभते । पद्मानां बिल्वफलानां लक्षमेकं हुत्वा राजवंशजो राज्यं लभते । अन्यो महतीं श्रियं प्राप्नोति । यथालब्ध-कुसुमानां सप्तलक्षाणि हुत्वा अक्षयविभवो भवति ॥ ३० ॥

**ॐ जये विजये अजिते अपराजिते स्वाहा ॥**

चतुर्भगिनीनां हृदयमन्त्रराजोऽयम् । चतुर्लक्षजप्तः पूर्वोक्तविधानेन पूर्वोक्तानि कर्माणि करोति ॥३१ ॥

**ॐ मेघोल्काय स्वाहा ॥**

पलाशपुष्पैः समिद्भिर्वा लक्षमेकं [होमं] कृत्वा हेम्नो लक्षं लभते । कन्यार्थी चाभिप्रेतां कन्यां लभते ॥ ३२ ॥

**ॐ कमलवासिनि कमले महालक्ष्मि राज्यं मे देहि वरदे स्वाहा ॥**

मन्त्रोऽयं महालक्ष्मीहृदयः सततं जप्तः विभूतिं परां ददाति । यथालब्ध-कुसुमहोमेन महती श्रीर्भवति । अभिप्रेतां कन्यामासादयति । कार्पासास्थिप्रमाणानां गुग्गुलगुटिकानां त्रिमधुराक्तानां लक्षहोमेन पद्मानां वा राज्यमासादयति ॥ ३३ ॥

**ॐ नन्दिनि वरदे किणि किणि खिणि खिणि श्रियं मे दद वौषट् स्वाहा[१] ॥**

अयं मन्त्रराजः नन्दिनीहृदयं पूर्वोक्तकर्मकरः॥ ३४

---

१. नास्ति- क. ख. ग. ।

**ॐ जम्भे मोहे स्वाहा ॥**

अयं मन्त्रराजः करवीरकुंसुमैस्ताराभट्टारिकामभिपूज्याक्षरलक्षं जपतो मनोरथं परिपूरयति ॥ ३५ ॥

**ॐ वसुधारिणि स्वाहा । ॐ श्रीवसु स्वाहा । ॐ वसुश्रिये स्वाहा । ॐ श्रीवसुमुखि स्वाहा । ॐ श्रीवसुमति श्रिये स्वाहा ॥**

आत्मानं जम्भलरूपं ध्यात्वा, स्वहृदये चन्द्रमण्डलमध्ये वसुधारां सुवर्णवर्णां द्विभुजां सर्वालङ्कारविभूषितां पूर्वादिदिग्भागे चतुर्देवीपरिवृतां दक्षिणे वरदां वामे धान्यमञ्जरीहस्तां ध्यायन् मनोरथं परिपूरयति । गोमयेन मण्डलकं चतुरस्रं द्विहस्त-प्रमाणं कृत्वा त्रिसन्ध्यं सुगन्धि[१]कुसुमैरभ्यर्च्य सहस्रचतुष्टयं जापं कुर्वता षण्मासान्-मनोरथं परिपूरयति। यथालब्धकुसुमानां चतुर्लक्षहोमेन महती श्रीर्भवति । अक्षरलक्षं जपन् महतीं श्रियमासादयति । गुग्गुलुगुटिकालक्षं हुत्वा मनोरथं परिपूरयति ॥ ३६ ॥

**ॐ वसुधारिणि अमुकीं कन्यां मे देहि दापय स्वाहा ॥**

नियमस्थोऽस्य मन्त्रस्य चत्वारि लक्षाणि जलमध्यगतः स्नात्वा जपन्नभिप्रेतां कन्यां लभते । निशासु क्षीरवृक्षसमिद्भिर्ग्रामस्य नाम गृहीत्वा लक्षं हुत्वा ग्रामं लभते ॥ ३७ ॥

**ॐ वसुधारिणि( ण्यै ) स्वाहा । ॐ चन्द्रकान्त्यै स्वाहा । ॐ दत्तायै स्वाहा । ॐ वसुदत्तायै स्वाहा । ॐ आर्यायै स्वाहा । ॐ सुभद्रायै स्वाहा । ॐ गुप्तायै स्वाहा । ॐ देव्यै स्वाहा । ॐ सरस्वत्यै स्वाहा ॥**

सौवर्णपत्रे राजतपत्रे ताम्रपत्रे वा अष्टदलकमलमध्ये वसुधाराम्, पूर्वादि-दिग्दलेषु चन्द्रकान्त्यादि महायक्षिण्यः पत्रद्वयमभिलिख्य संपुटीकृत्य घृतमधुशर्करा-मध्ये निक्षिप्य पूर्वोक्तविधानेन पूर्वोक्तानि कार्याणि करोति ॥ ३८ ॥

---

१. नास्ति- क. ख. ग. ।

[१]मध्ये । **ॐ जम्भलजलेन्द्राय स्वाहा**। दिशि[२]। **ॐ मणिभद्राय स्वाहा । ॐ पूर्णभद्राय स्वाहा । ॐ धनदाय स्वाहा । ॐ वैश्रवणाय स्वाहा ।** विदिशि[३] । **ॐ केलिमालिने स्वाहा । ॐ विचित्रकुण्डलिने स्वाहा । ॐ मुखेन्द्राय स्वाहा । ॐ [४]वरेन्द्राय स्वाहा ॥**

अष्टभिर्महायक्षैः परिवृतो भगवत्या च वसुधारया सहितः सुवर्णवर्णो नकुलीबीजपूरकधरः प्रलम्बोदरः सर्वालङ्कारभूषितः पूर्वोक्तयक्षिणीसहितान् यक्षेन्द्रांश्च त्रिसन्ध्यमभिपूज्य ध्यायतां जपतां त्रैलोक्यराज्यमपि भगवान् ददाति । अष्टौ शतानि जलचुलुकानां वा प्रयच्छताम् । प्रातः काकरुदिते जलमध्यगतो यो जपति तस्याक्षयधनसमृद्धिर्भवति । अथवा सुवर्णादिपात्रे वसुधारां यक्षिणीसहितां द्वितीयपात्रे भगवन्तं जम्भलं यक्षैः परिवृतमभिलिख्य संपुटीकृत्य धारयेत् । अष्टौ महासिद्धीर्ददाति, किं पुनरन्याः सिद्धयः ।

**सिद्धैकवीरमहातन्त्रराजे द्वितीयः पटलः ॥**

१. नास्ति- क. ख. ग. ।
२. नास्ति- क. ख. ग. ।
३. नास्ति- क. ख. ग. ।
४. चरेन्द्राय- भो० ।

## तृतीयः पटलः

ॐ वज्रतीक्ष्णदुःखच्छेदप्रज्ञाज्ञानमूर्त्तये ।
ज्ञानकायवागीश्वर अरपचनाय ते नमः ॥

भगवन्तं सिद्धैकवीरं मञ्जुवज्रं शरदिन्दुकराकारं वामे नीलोत्पलधारिणं दक्षिणे वरदमात्मानं विचिन्त्य आद्यनुत्पन्नप्रकृतिप्रभास्वरं सुविशुद्धधर्मधातुं त्रिसप्ताहात् सरस्वतीं वाणीमुपलभते। षण्मासेन वागीश्वरमासादयति । प्रत्यक्षेण भगवन्तं वागीश्वरं पश्यति । श्रुतिधारितां लभते । वचामर्द्धतोलकप्रमाणां अष्टोत्तरशताभिमन्त्रितां प्रभाते क्षीरेण तैलेन घृतेन वा मासमेकं पिबेत् । जडत्वं गद्गदकण्ठत्वं मूकत्वं विनश्यति । मत्तकोकिलनिस्वनो मधुरस्वरः स्पष्टवाक्च भवति। षण्मासाभ्यासादश्रुतानि शास्त्राणि प्रत्यक्षीभवन्ति । श्रुतानि न विनश्यन्ति । श्रुतिधरो भवति ॥ ३९ ॥

ॐ वाक्येदं नमः ॥

वागीश्वरभट्टारकस्य हृदयमिदम् । पूर्वोक्तसमाधिस्थो अभ्यसन् सर्वाणि पूर्वोक्तानि कर्माणि करोति । समुद्रगामिन्यां महानद्यां कण्ठमात्रमुदकमवतीर्य लक्षमेकं जातीकुसुमकलिकाः गृहीत्वा मन्त्रमुच्चार्य एकैकां कलिकां स्रोतसि प्रवाहयेत् । एककलिका स्रोतसि उल्लंघ्य आगच्छति सा दन्तेनास्पृशन् गिलनीया श्रुतिधारितां लभते । यथालब्धकुसुमानां लक्षाणि चत्वारि हुत्वा वागीश्वरसमो भवति। ब्राह्मीचूर्णं विदारपद(कर्ष)मात्रं अष्टशताभिमन्त्रितं प्रभाते मण्डलकं कृत्वा यथाविभवतो भगवन्तं [१]मञ्जुवज्रं संपूज्य घृतेनारनालेन वा पिबेत् । षण्मासेन श्रुतिधरो वाग्मी मधुरस्वरो जायते । अक्षरलक्षं जपतो मन्त्रराजः पूर्वसेवाविधिना सिद्धो भवति । पश्चात् सोमग्रहे भानुग्रहे वा जातिलोहप(घ)टितं खड्गं स्वहस्तेन गृहीत्वा चन्द्रमपश्यन् तावज्जपेत् यावन्मुक्तो भवति । खड्गविद्याधरो भवति । एवं चक्रवज्रत्रिशूलशरमुद्गरथा(पा)शादिकं साधनीयं विद्यादिभिः । रसायनादि संस्कृत्य साधनीयम् । अथाञ्जनतिलकपादलेपवशीकरणद्रव्याणि मेलयित्वा साधनीयानि क्षीरभक्तेन दधिभक्तेन वा सघृतेन सशर्करेण पात्रं पूरयित्वा हस्तेनावष्टभ्य जप्त्वा

१. नास्ति- क. ख. ग. ।

भक्षणीयं पञ्चशतायुर्भवति । माषान् मुखे प्रक्षिप्य जपेत् । अंकुरं प्रभवति कविः श्रुतिधरो वाग्मी मेधावी च भवति । पद्मानां लक्षहोमेन भगवान् प्रत्यक्षीभवति । विल्वानां लक्षहोमेन त्रैलोक्यराज्यमासादयति । यथालब्धकुसुमानां [१]चतुर्लक्षं हुत्वा वाक्सिद्धिर्भवति । घृताक्तपञ्चव्रीहिहोमेन चतुर्लक्षमात्रेण यक्षिणीमाकर्षयति पाताल-कन्यां वा । एवं पञ्चसमिद्भिरपि कर्तव्यः । सतताभ्यासादिहैव जन्मनि बुद्धत्वमपि साध्यत इति ॥ ४० ॥

**ॐ ह्रीः हूँ ॥**

अयं मन्त्रराजः समानफलदः ॥ ४१ ॥

**ॐ ह्रीः महामायाङ्गै( यै ) महासरस्वत्यै नमः ॥**

हृदयमिदमार्याताराभट्टारिकायाः सर्वकर्मकरः । ॐ प्रकृतिपरिशुद्धाः सर्व-धर्माः प्रकृतिपरिशुद्धोऽहं सबाह्याभ्यन्तरमिति । सचराचरं विश्वमात्मानञ्च प्रकृति-परिशुद्धं विचिन्त्य सितकमलं सप्तहस्तप्रमाणं तस्योपरि चन्द्रमण्डलं तन्मध्ये कमलवरदविराजितभुजद्वयां भगवतीं महाकरुणामयविग्रहां परोपकारप्रवृत्तां साधका-नामभिप्रेतसिद्धिदानाभिरतां शरदिन्दुकराकारां [२]श्वेतचन्दनावलेपनां श्वेतवस्त्राव-गुण्ठितगात्रां श्वेतादिनानामुक्ताहारच्छादितहृदयां नानारत्नालङ्कृतशरीरां परिस्फुर-द्रश्मिसहस्रैरनन्तापर्यन्तलोकधातुमवभासयन्तीं द्वादशवर्षाकृतिमभिनवयौवनोदय-मण्डितविग्रहां महासरस्वतीमात्मानं विचिन्त्य पुरस्तात् प्रज्ञां दक्षिणतो मेधां पश्चिमतो मतिं, वामतः स्मृतिं पूर्वोक्तगुणसुन्दरीं देवीं विचिन्त्य अधः स्वनाभिदेशे चन्द्रमण्डलमध्ये श्वेतवर्णं ॐकारं विचिन्त्य तन्निश्चरन्तीमशेषवाङ्मयमालाम-विच्छिन्नप्रवाहां विचिन्तयन् मन्त्रं जपेत् । एकान्ते तद्गतमानसो मन्त्री नियतात्मा पद्मरागसन्निभ[३]सूर्यमध्यमौनी मासेन सरस्वतीं [४]वाणीं लभते । त्रिभिर्मासैर्ब्रह्म-घा[तो]ऽपि सिध्यति । षण्मासेन सरस्वतीप्रतिरूपो भवति ।

---

१. नास्ति- भो० ।
२. नास्ति- क. ख. ग. ।
३. नाभि- भो० ।
४. नास्ति- क. ख. ग. ।

अजाक्षीराभयाव्योषहिङ्गूग्राशिग्रुसैन्धवैः ।
सिद्धं सारस्वतं सर्पिः पिबेत्सप्ताभिमन्त्रितम् ॥

चतुर्गुणेन क्षीरेण घृतप्रस्थं विपाचयेत् ।
पूर्वोक्तैः पलिकामात्रैः शनैर्मृद्वग्निना सुधीः ॥

मासमात्रं प्रभुञ्जीत वाणीं प्राप्नोत्यनुत्तराम् ।
षण्मासोपयोगेन साक्षाद्वागीश्वरतां व्रजेत् ॥

वचायष्टीशटीसिंहीपथ्यानागरदीपकैः ।
सिध्यते वाग्विवलितं सकुष्ठकणजारजैः ॥

प्रातः संपूज्य देवीं तु सुगन्धकुसुमादिभिः ।
सप्ताभिमन्त्रितं भुक्त्वा षण्मासाच्छ्रुतिधारकः ॥

त्रिभिर्मासैर्भवेद् वाग्मी मासैकेन तु बुद्धिमान् ।
मत्तकोकिलनिर्घोषो जायते मधुरस्वरः ॥

प्रभाते सप्ताभिमन्त्रितं हेमजाहरीतकी चोग्रा मासमेकं स्थापयित्वा भक्षयेत्, मासेनैव मेधावी वाग्मी शुद्धस्वरः प्रज्ञावान् जायते । षड्भिर्मासैः श्रुतिधरो भवति॥ ४२ ॥

**ॐ वाग्वादिनि वाचं मे नियच्छ सरस्वती( ति ) महाश्वेते स्वाहा ॥**

हृदयमिदं महाश्वेताम्बुजायाः सर्वाणि पूर्वोक्तानि कर्माणि करोति॥ ४३ ॥

**ॐ अर्कमालिनि किणि किणि खिणि खिणि स्वाहा ॥**

भगवन्तं सिद्धैकवीरं निःशेषवाङ्मयं पुस्तकधारिणं दक्षिणहस्ते प्रज्ञाखड्ग-हस्तं कुमाररूपमात्मानं मञ्जुवज्रं विचिन्त्य अग्रतोऽर्कमालिनीं महासरस्वतीं पृष्ठतो महाश्रियं दक्षिणे केशिनीं वामे चोपकेशिनीं चिन्तयेत् । शरदिन्दुकराकारां [1]सर्वालङ्कारविभूषितां ध्यायेत् । एवं ध्यानस्थितेन नियमस्थितेन यथाविभवतः पूजां

---

१. नास्ति- भो० ।

कृत्वा चत्वारि लक्षाणि अस्य मन्त्रस्य पूर्वसेवाविधिना पूर्वोक्तक्रमेण जपेत्। ततः सारस्वतं ब्राह्मीघृतं वा पलमात्रं परिजप्य समाधिस्थेन पातव्यं स्वयमेव सरस्वत्या स्वकरेण दत्तं परिकल्प्य । तत्रेदं ब्राह्मीघृतम् —

ब्राह्मीरसेन क्षीरेण घृतप्रस्थं विपाचयेत् ।
औषधं स वचाकुष्ठशंखपुष्पीं प्रदापयेत् ॥

हरिद्रा मालती चैव त्रिवृत्ता सहरीतकी ।
एषां च पलिकाभागाः शेषानां कर्षिकाः स्मृताः ॥

पिप्पल्यश्च विडङ्गानि सैन्धवं शर्करायुतम् ।
एतत्सर्वं समालोड्य शनैर्मृद्वग्निना पचेत् ॥

ततः प्राशितमात्रेण वाग्विशुद्धिरनुत्तरा ।
सप्तरात्रप्रयोगेण किन्नरैः सह गीयते ॥

मासमात्रोपयोगेन प्रज्ञाशाली भवेन्नरः ।
मासत्रयोपयोगेन भवेत् श्रुतिधरः परः ॥

षड्भिर्मासैर्भवेत्साक्षाद्वागीश्वरसमो नरः ।
भनक्त्यष्टादशकुष्टानि सप्त चैव महाक्षयान् ॥ ४४ ॥

**ॐ अनन्तज्ञानश्रिये मञ्जुश्रिये नमः ॥**

पूर्वोक्तदेवीचतुष्टयपरिवृतं वागीश्वरमात्मानं ध्यात्वा पूर्वोक्तक्रमेण मन्त्रं जपतां सर्वाणि पूर्वोक्तानि कर्माणि करोति ॥ ४५ ॥

**ॐ अरपचन धीः स्वाहा**

विजने[१] मण्डलकं कृत्वा भगवन्तं वागीश्वरं गुरुभट्टारकञ्च संपूज्य सुखासनमुपविश्य बोधिचित्तमुत्पादयेत् । पश्चात् ॐ स्वभावशुद्धाः सर्वधर्मा स्वभावशुद्धोऽहमिति वारत्रयं मन्त्रमुच्चार्य स्वभावशुद्धमात्मानं विश्वं च विचिन्त्य शून्यतामामुखीकृत्य

---

१. प्रच्छन्ने- क. ख. ग. ।

झटितिनिष्पन्नं श्वेतकमलस्योपरि चन्द्रमण्डलस्थं श्वेतवर्णं खड्गपुस्तकधारिणमात्मानं विचिन्तयेत् । स्वयमेव वागीश्वरोऽहं दक्षिणे केशिनीं वामे चोपकेशिनीं रत्नकमलधारिणीं शुक्लवर्णां विचिन्त्य अग्रतो [1]सूर्यप्रभं श्वेतवर्णं सूर्यमण्डलाक्रान्तं नीलोत्पलधारिणं पृष्ठतश्चन्द्रप्रभं चन्द्रमण्डलाक्रान्तं नीलोत्पलधारिणं चिन्तयेत् । ततः स्वहृदये ज्वालामालाकुलं परिस्फुरन्तं अकारं विचिन्त्य तत्परिनिष्पन्नचक्रमष्टारमशेषवाङ्मयविराजितं शीघ्रं परिभ्रमन्तं विचिन्तयेत् । एवमभ्यस्यतः षण्मासेन सर्वाणि शास्त्राणि अश्रुतान्यपि अर्थतो ग्रन्थतश्च प्रत्यक्षीभवन्ति । सम्वत्सरे वागीश्वरसमो भवति । **अरपचनचक्रविधानम्** ॥ ४७ ॥

**ॐ वागीश्वर [2]मुः ॥**

इदं (मं) मन्त्रं जपतः पूर्ववत् पूर्वोक्तानि फलानि भवन्ति । चक्रमध्ये मुःकारो [3]रक्तज्वालामालाकुलो द्रष्टव्यः । **प्रज्ञाचक्रस्य विधानम्** ॥ ४७ ॥

**ॐ धर्मधातुवागीश्वर मुं स्वाहा ॥**

पूर्वोक्तक्रमेण पञ्चात्मकमात्मानं ध्यात्वा मुंकारगर्भं षोडशारचक्रं चिन्तनीयम् । [4]अष्टारं वा चिन्तयतां पूर्वोक्तानि फलानि जायन्ते ॥ ४८ ॥

**ॐ वज्रतीक्ष्ण वरद मुः स्वाहा ॥**

आत्मानं मुःकाराक्षरं परिनिष्पन्नं तेजःपुञ्जानि दिङ्मण्डलान्यवभासयन्तं वागीश्वरमेकवीरं झटिति विचिन्त्य स्वहृदये ॐकाराक्षरनिष्पन्नं शतसहस्रकिरणविराजितमशेषलोकधातुमवभासमानं सूर्यमण्डलं चिन्तयेत् । [5]एवं भावयन् योगी षण्मासमात्रेण वागीश्वरप्रतिसमो जायते । पूर्वोक्तफलान्यस्योत्पद्यन्ते ।

**इति सिद्धैकवीरमहातन्त्रराजे तृतीयः पटलः ॥**

---

१. जालिनीप्रभं- क. ख. ग. ।
२. मुं- भो० ।
३. नास्ति- क. ख. ग. ।
४. एवं चिन्त- भो० ।
५. 'एवं भावयन् योगी' नास्ति- भो० ।

## चतुर्थः पटलः

**ॐ लवणाम्भोसि तीक्ष्णोसि उदग्रोसि भयंकरः । अमुकस्य दह गात्राणि दह मांसानि दह त्वचम् नखान्यपि दह अस्थीनि अस्थिभ्यो मज्जकं दह । लवणं छिन्दति लवणं भिन्दति लवणं पचति शोणितलवणे ह्रियमाणे कुतो निद्रा कुतो रतिः । यदि वसति योजनशते नदीनाञ्च शतान्तरे । नगरे लोहप्राकारे कृष्णसर्पकृताकुले । तत्रैव वशमानीहि लवणबन्धपुरस्कृतः ॥४९ ॥**

**ॐ चिटि चिटि विक्लोलि विक्लोलि अमुकं सधनपरिवारमेव समानय स्वाहा ॥**

पूर्वसेवाविधानाद् अयुतमेकं [जप्त्वा] पश्चात् साधनमारभते । दक्षिणोत्तर-पार्श्वे ताराभृकुटीदेवीद्वयसहितम् आर्यावलोकितेश्वरभट्टारकरक्तवर्णरक्तमालावस्त्रा-लङ्कारानुलेपनं पाशाङ्कुशधनुर्बाणकरं चतुर्भुजं शृङ्गारैकरसं कुसुमान्विताशोकतरो-रधस्तात् अवस्थितमात्मानं विचिन्त्य त्रिसन्ध्यं लवणाकृतीनां अष्टोत्तरशतं जुहुयात् । सप्ताहात् पुरुषं स्त्रियं वा वशीकरोति । त्रिसप्ताहात् महापुरुषं वशमानयति । लवणसहितेन मदनेन साध्यप्रतिकृतिपुत्तलिकां चतुरङ्गुलप्रमाणां कृत्वा खदिराङ्गारे निर्धूमे मन्त्रमुच्चारयन् त्रिसन्ध्यं तापयेत् यस्य नाम्ना स वशीभवति । वज्रोदकभावितं लवणं परिजप्याष्टशतवारं दातव्यं भक्षणमात्रेण वशीभवति ॥ ५० ॥

**ॐ लवणाम्भोसि तीक्ष्णोसि उदग्रोसि हृदयंगम अमुकस्य हृदयं पीतं नास्ति लोके चिकित्सकः ॐ चिटि चिटि विक्लोलि विक्लोलि महाविक्लोलि महाविक्लोलि अमुकं मे वशमानय स्वाहा ॥**

पूर्ववत् पूर्वसेवाविधानं कृत्वा लवणोदकचुलुकत्रयं त्रिसन्ध्यं यस्य नाम्ना पिबति स वशीभवति । लवणराजिकां समभागं कृत्वा यस्य नाम्ना जुहोति स वशीभवति ॥ ५१ ॥

**ॐ कुरुकुल्ले स्वाहा ॥**

आर्यताराभट्टारिकाया हृदयं अप्रतिहतशक्तिः त्रिभुवनवशकर्मणि प्रथिता । पूर्वोक्तसमाधिस्थः अक्षरलक्षं जपेत् । पश्चात् पुष्पधूपविलेपनचूर्णताम्बूलादि यस्य दीयते स वशीभवति । सुगन्धिधूपेनात्मानं धूपयेत् । सर्वजनप्रियो भवति । रक्त-कुसुमानि होमयेत् यस्य नाम्ना स वशीभवति । खाने पाने वाभिमन्त्र्य समादीयते स वशीभवति । महापुरुषवशीकरणे श्वेतसर्षपा होतव्याः । पश्चात् सुतिथिनक्षत्रादिना भगवत्याः पूजां कृत्वा कुङ्कुमगोरोचनकर्पूराद्यैः भूर्जे वस्त्रे वा षोडशारमुत्पलपत्राकारं चक्रमभिलिख्य चक्रमध्ये मन्त्रसहितं साध्यनाम लिखनीयम् । पत्रेषु कुरुकुल्लेति अक्षरचतुष्टययन्त्रितं साध्यस्य नाम लेखनीयम् । बहिः ॐकारेण त्रिगुणीकृतचक्रं रक्तसूत्रेण संवेष्ट्य मदनमय्याः पुत्तलिकाया हृदयमध्ये विनिक्षिप्य खदिराङ्गारेण तापयन् त्रिसन्ध्यं पादाकृष्टिं कुरुते । पुरुषस्य स्त्रियो वा वशीकरणे ताम्रसूच्या पादौ विद्ध्वा तापयेत् वशीभवति । यंकारेण वायुमण्डलं परिनिष्पन्नं विचिन्त्य तस्योपरिस्थं साध्यं मुक्तकेशं विवस्त्रं कण्ठे पाशेन बद्धं हृदये अंकुशेनाक्रम्य [१]वायुवेगेन विद्यामन्त्रेणाकृष्य साधकस्य पादमूले निक्षिप्तं विचिन्त्य सर्वं कर्तव्यम् । अभ्यासात् पिण्डाकृष्टिमपि करोति ध्यानमात्रेण । घृतमधुशर्करामध्ये मन्त्रं निक्षिप्य त्रिसंध्यं कुसुमादिभिरभ्यर्च्य मन्त्रं जपन् यमिच्छति तं वशीकरोति । श्वेतपद्म-तन्तुभिर्वर्तिं कृत्वा कपिलागोघृतेनापक्वशरावे कज्जलं पातयित्वा अष्टशताभिमन्त्रितेन कज्जलेनाञ्जितेन नयने सर्वजनप्रियो भवति । महातैलेन महाकपाले श्वेतपद्मतन्तु-वर्त्या पितृवने कज्जलं प्रसाधितं कृष्णाष्टम्यां चतुर्दश्यां वा रात्रौ कर्तव्यम् । [२]तेन कज्जलेन नयनेऽञ्जितेन सर्वजनप्रियो भवति ॥ ५२ ॥

**अमले विमले कुङ्कुमे समयेन बद्धोसि बिन्दून् बिन्दून्[३] इच्छया देवो वर्षति विद्योतयति गर्जति [४]गर्जति विस्मयमहाराज समायित वर्धयित हुँ ।**

---

१. नास्ति- क. ख. ग. ।
२. 'तेन----भवति' नास्ति- क. ख. ग. ।
३. नास्ति- क. ख. ग. ; इच्छ इच्छया- भो० ।
४. नास्ति- क. ख. ग. ।

**देवेभ्यो मनुष्येभ्यो गन्धर्वेभ्यः शिखिग्रहदेव आनन्दस्य ग्रहणीयागमनाया-क्रमणीय जुहोमीह स्वाहा ॥**

अयं मन्त्रराजस्य उपचारविधिः । गृहाङ्गणमध्ये गोमयेनोपलेपनं कृत्वा वेदीमालिख्य दर्भान् संस्तीर्याग्निं प्रज्वाल्य अष्टशतमर्कपुष्पाणां गृहीत्वा मन्त्रमाव-र्त्तयन्नेकमेकं पुष्पमग्नौ जुहुयात् । ईप्सितां स्त्रियं पुरुषं वा आकर्षयति । सिद्धमिति ज्ञात्वैव बद्धादरः कुशलैः कार्यः ।

**इति सिद्धैकवीरमहातन्त्रराजे चतुर्थः पटलः ॥**

## इति सिद्धैकवीरमहातन्त्रराजं समाप्तम् ॥

•

# རྩོམ་གྱི་ངོ་སྤྲོད་མདོར་བསྡུས།



སྔཱའི་དུས་དེབ་འདོན་ཐེངས་ཉེར་གཅིག་པའི་ནང་དཔལ་མཱ་ཏྲྀ་ཙེ་ཊས་མཛད་པའི་བསྔགས་པར་འོས་པ་སངས་རྒྱས་ཀྱི་བསྟོད་པ་ལས་བསྟོད་པ་གཉིས་རེ་དུས་དེབ་འདོན་ཐེངས་རེ་རེའི་ནང་འགོད་རྒྱུའི་བརྡ་ལན་ཞུས་ཡོད། གོ་རིམ་དེ་བཞིན་འདོན་ཐེངས་འདིའི་ནང་བསྟོད་པ་ལྔ་པ་དང་དྲུག་པ་དཔར་འདེབས་ཞུས་ཡོད། དེའི་ནང་རྩ་བར་མ་ཚང་བའི་ཆ་ཤས་རྣམས་གང་ཐུབ་བོད་འགྱུར་ནས་ལེགས་སྦྱར་ནང་སྒྱུར་ཐོག [ ] ཤད་གུག་ནང་བཞག་ཡོད།



དུས་དེབ་འདོན་ཐེངས་འདིའི་ནང་གཤམ་འཁོད་དཔེ་དེབ་ཁག་གི་ངོ་སྤྲོད་ཞུས་ཡོད།

༡ གཟུངས་བསྡོགས་ཕྱོགས་བསྡུས།

༢ སོ་སོ་འབྲང་མའི་རྟོག་གཟུངས།

༣ ཁྲོ་བོ་ཧེ་རུ་ཀ་ཆེན་པོ་མཆོད་པའི་སྒྲུབ་ཐབས་ཆོ་ག

༤ ཡེ་ཤེས་ཏ་ལ་ལའི་སྒྲིན་སྒྲིག་ཚིག་ལེའུར་བྱས་པ།

༥ དཀྱིལ་འཁོར་གྱི་ཕྲེང་བ།

༦ འཆི་མེད་བདུད་རྩི་བྱེད་པ།

༧ མཁའ་འགྲོ་མ་ཐམས་ཅད་ཀྱི་གསང་བ།

༨ གནས་བརྒྱད་མཆོད་པའི་ཆོ་ག

## ནང་པའི་རྒྱུད་གཞུང་གི་ངོ་སྤྲོད། ༣༥-༤༠

(དེ་བཞིན་གཤེགས་པ་ཐམས་ཅད་ཀྱི་དེ་ཁོ་ན་ཉིད་བསྡུས་པ་དང་ངན་འགྲོ་ཐམས་ཅད་ཡོངས་སུ་སྦྱོང་བའི་རྒྱུད།)

ཧྲཱའི་འདོན་ཐེངས་སྔ་མ་རྣམས་སུ་ནང་པའི་རྒྱུད་ཀྱི་ངོ་སྤྲོད་ཀྱི་མགོ་བརྗོད་འོག་རྒྱུད་སྡེ་སྣ་ཚོགས་ཀྱི་ངོ་སྤྲོད་ཞུས་ཡོད། རིམ་པ་དེའི་ནང་འདོན་ཐེངས་འདིར་རྣལ་འབྱོར་རྒྱུད་ཀྱི་རྩོམ་རིག་ངོ་སྤྲོད་དམིགས་སུ་བཀར་ནས་དེ་ཁོ་ན་ཉིད་བསྡུས་པ་དང་། ངན་འགྲོ་ཐམས་ཅད་ཡོངས་སུ་སྦྱོང་བའི་རྒྱུད་དང་འབྲེལ་བའི་གཞུང་གི་མགོ་མཇུག་ཀུན་ལ་གསལ་བཤད་ཞུ་རྒྱུར་འབད་ཡོད།

## སྐྱབས་གསུམ་གྱི་རྣམ་གཞག ༤༡ - ༥༦

དེང་སང་ནང་པའི་སྤྱི་ཚོགས་ནང་སྐྱབས་འགྲོ་བྱེད་པ་དེ་ཆོ་ག་ཕྱག་ལེན་ཙམ་དུ་ལུས་ཡོད། རྒྱུ་མཚན་ནི་དེའི་ངོ་བོ་དང་ཐོབ་པའི་མཚམས་དང་དེ་བཞིན་བསླབ་བྱ་སྲུང་ཚུལ་མི་ཤེས་པ་དང་། སྐྱབས་འགྲོའི་ཕན་ཡོན་སོགས་ཇི་ཡོད་མི་ཤེས་པས་ཡིན། དེ་བས་ན་སྐྱབས་འགྲོ་བྱེད་ན་ཡང་སྐྱབས་སུ་སོང་ཡོད་མེད་ཐེ་ཚོམ་དུ་གྱུར། དེར་བརྟེན་རྩོམ་ཤོག་འདིར་གཙོ་བོ་བཀའ་དང་དམིགས་བསལ་ཇོ་བོ་རྗེས་མཛད་པའི་སྐྱབས་འགྲོའི་ཡན་ལག་བཅོ་ལྔ་ལ་བརྟེན་ནས་ཉན་ཐོས་དང་དེ་བཞིན་ཐེག་ཆེན་དང་གསང་སྔགས་ཀྱི་སྐྱབས་འགྲོའི་ངོ་བོ་སོགས་གསལ་བཤད་ཞུས་ཡོད།

## ནང་པའི་ཆོས་མངོན་པའི་ཞིབ་འཇུག ༥༧ - ༦༤

ཆོས་མངོན་པ་ནི་ནང་པའི་གཞུང་གི་སྙལ་ཅིག་ལྟ་བུ་ཡིན། དེའི་ཐོག་ནང་པའི་གྲུབ་མཐའ་དག་འཕེལ་རྒྱས་བྱུང་ཡོད། མངོན་པའི་སྡེ་སྣོད་རྣམས་ཀྱང་སངས་རྒྱས་ཀྱི་བཀར་ངོས

འཛིན་ཐུབ་ཡོད། དེ་ལ་དེ་ཁོ་ན་ཉིད་དཔྱོད་པའི་གཞུང་ཞེས་བརྗོད་ཆོག དེའི་ནང་འཇིག་རྟེན་དང་འཇིག་རྟེན་ལས་འདས་པའི་ཆོས་རྣམས་ཀྱི་ངོ་བོ་ཇི་ལྟ་བ་བཞིན་བཤད་ཡོད། དཔྱད་པ་འདི་ལ་བརྟེན་ནས་རང་གི་མ་རིག་པ་བསལ་ནས་རྣམ་བྱང་གི་ཕྱོགས་སམ་མྱང་འདས་ཐོབ་ནུས། དེར་བརྟེན་མངོན་པའི་གཞུང་འདི་ཉིད་ནང་དོན་རིག་པའི་གཞུང་ཞིག་ཡིན། ནུབ་ཕྱོགས་ལ་ཡང་སེམས་ཀྱི་རིག་པའི་ཐོག་དཔྱད་ཞིབ་ཕྲ་ཞིང་ཕྲ་བ་བྱས་རུང་། བསྟུ་དཀའ་བའི་གནད་འགག་ཞིག་ད་ལྟ་ཡང་ཐག་གཅོད་མ་ཐུབ་ནས་དཔྱད་བཞིན་ཡོད། ཆོས་མངོན་པར་ཡང་སེམས་དང་དེའི་འཇུག་པའི་སྐོར་འགྲེལ་བཤད་ཕྲ་བཞིན་ཕྲ་བ་བྱས་ཡོད། འཇིག་རྟེན་པའི་ཕྱོགས་ཀྱི་སེམས་ཀྱི་འཇུག་པ་ཙམ་མ་ཟད་འཇིག་རྟེན་ལས་འདས་པའི་ལམ་འབྲས་གཉིས་ཀྱི་སེམས་ཀྱི་འཇུག་པ་དང་དེ་བཞིན་ནང་པའི་སྐད་ཅིག་མ་དང་སྐྱེ་བ་སྔ་ཕྱི། དེ་བཞིན་སེམས་ཀྱི་སྐད་ཅིག་གཅིག་གི་སྟེང་དུ་སྐྱེ་བ་མང་པོའི་བག་ཆགས་ཀྱིས་བསྐྲུབས་པའི་གང་ཟག་གི་མི་ཚེ་ཡོངས་རྫོགས་ཀྱི་ངོ་བོ་ཇི་ལྟར་བྱུང་བའི་ཚུལ་རྣམས་མཚོན་ནུས། ནང་པའི་སེམས་ཀྱི་སྐད་ཅིག་མའི་རྒྱུན་དེའི་ཐོག་ཟབ་རྒྱས་ཀྱི་སྒོ་ནས་དཔྱད་པ་བྱེད་ཡོད།

ངེས་པར་དུ་མ་འོངས་པར་གང་ཟག་གི་དཔྱད་ཕྱོགས་ལ་ལམ་སྟོན་བྱེད་རྒྱུར་དགོས་མཁོ་ཆེན་པོ་ཆགས་ཡོད། དེ་དང་མཚུངས་པར་ནུབ་ཕྱོགས་ཀྱི་སེམས་གསོ་སྨ་བ་རྣམས་ལ་ཡང་ལམ་སྟོན་གསར་པ་རྙེད་པའི་རེ་བ་ཆེན་པོ་ཡོད། རྒྱུ་མཚན་དེར་བརྟེན་ནང་པའི་མངོན་པའི་གཞུང་ཐོག་ཟབ་པ་དང་རྒྱ་ཆེ་བའི་མཉམ་བསྡུར་གྱི་ཞིབ་འཇུག་བྱེད་རྒྱུ་གལ་ཆེར་སྣང་། རྩོམ་ཤོག་འདིར་ནང་པའི་ལྟ་ཚུལ་གྱི་ཆོས་མངོན་པའི་རྟོགས་གཅོད་སྙིང་བསྡུས་བཀོད་ཡོད།

ཆེས་དཀོན་གསུང་རབ་ཁག་གི་རྩ་བའི་མ་དཔེ། ༦༥ - ༩༥

འགོ་བརྗོད་འདིའི་ཐོག་དྷཱིའི་འདོན་ཐེངས་ཉེར་གཉིས་ནང་གལ་ཆེ་གསུང་རབ་ལག་ཁྲིས་མ་གཞུང་དྲུག་ཅུ་རེ་གསུམ་གྱི་སྐོར་འགོད་ཡོད། དུས་རབ་འདོན་ཐེངས་འདི་ནང་གཞན་ཡང་ནང་པའི་གཟུངས་ཀྱི་གཞུང་ལག་ཁྲིས་མ་བརྒྱད་ཅུ་གྱ་གཉིས་ཀྱི་གནས་ཚུལ་བཀོད་ཡོད།

ཀྱེ་རྡོར་གསལ་བྱེད་ནང་བྱུང་བའི་རྫོགས་རིམ་གྱི་དཔྱད་ཞིབ་མདོར་བསྡུས། ༩༦-༡༡༣

འདོན་ཐེངས་འདི་ནང་དཔལ་སྒྲ་ཅན་གསང་བའི་ཞབས་ཀྱིས་མཛད་པའི་ཀྱེ་རྡོར་གསལ་བྱེད་ནང་གསལ་རྫོགས་རིམ་སྐོར་མདོར་བསྡུས་བོད་འགྱུར་ལ་བརྟེན་ནས་འདིར་བཀོད་ཡོད། འདི་ (ཀྱེ་རྡོར་) རྒྱ་རྒྱུད་རྗེས་སུ་འབྲངས་ནས་བསྐྱེད་རིམ་དང་རྫོགས་རིམ་གྱི་སྒྲུབ་ཐབས་བསྡུས་ནས་ 'གསལ་བྱེད་ཀྱི་རྡོར་སྒྲུབ་ཐབས་' མཛད་ཡོད། འོན་ཀྱང་རིམ་གཉིས་འདིའི་ནང་ནས་བསྐྱེད་རིམ་ཙམ་མ་གཏོགས་ལེགས་སྦྱར་ཐོག་མ་ཐོབ། དེར་ཀྱེ་རྡོར་སྒྲུབ་ཐབས་ཀྱི་རིམ་པ་རྣམས་སྡེ་ཚན་སོ་གཉིས་སུ་ཕྱེ་ཡོད་པ་ལ་ 'མདོའི་སྒྲུབ་ཐབས་' ཞེས་མཚན་གསོལ། བསྟན་འགྱུར་ནང་གོང་ཞུས་རིམ་པ་གཉིས་ཀྱི་བོད་འགྱུར་བཞུགས་ཡོད། འདིའི་རིམ་པ་གཉིས་པར་རྡོ་རྗེ་བཟླས་པ། བདག་བྱིན་རླབས། རྣམ་དག་སྒྱུ་ལུས། ལྷུང་བའི་རིམ་པ་ཞེས་མིང་བཏགས་ཡོད་ལ། རིམ་པ་རེ་རེར་རྣལ་འབྱོར་པས་གང་གང་སྒྲུབ་དགོས་སོགས་བརྗོད་གཞི་འདིའི་ཐོག་རྟོགས་གཅོད་ལེགས་པོ་ཐོབ་ཀྱི་ཡོད།

དུས་ཀྱི་འཁོར་ལོའི་རྩོམ་རིག་འབྱུང་ཁུངས་ཐོག་ཟིན་ཐྲིས་མདོར་བསྡུས། ༡༡༣-༡༣༦

རྩོམ་ཤོག་འདིའི་ནང་དུས་འཁོར་གྱི་རྩོམ་རིག་དང་འབྲེལ་བའི་དཔེ་དེབ་དང་པོར་བསྡུས་རྒྱུད་འགྲེལ་པ་ཕྱག་ན་རྡོ་རྗེས་མཛད་པ་དང་། རྡོ་རྗེ་སྙིང་པོས་མཛད་པའི་ཀྱེ་རྡོར་བསྡུས་

དོན་འགྲེལ་པའི་རྒྱུད་དང་པདྨ་དཀར་པོས་དྲི་མེད་འོད་རྣམས་ཞིབ་འཇུག་བྱས་ཡོད། དཔེ་དེབ་ཆ་ཤས་དང་པོའི་ནང་མ་གཞུང་གི་སྙིང་དོན་ཚིག་གྲངས་འགའ་ཤས་བསྡུས་རྒྱུད་ནང་དྲངས་ཡོད་པ་རྣམས་དྲི་མེད་འོད་ཀྱི་པརམཱཀྵརཛྙཱནསིདྡྷིའི་ལེའུའི་ནང་ཡང་དྲངས་འདུག  དེ་ནས་དེའི་ཚིགས་བཅད་བཅུ་དང་ཕྱེད་ཀ་འཁོར་ལོ་སྡོམ་པའི་ཕྱག་ན་རྡོ་རྗེའི་འགྲེལ་པའི་འགྱུར་ལྟར་བཀོད་ཡོད། རྩོམ་གྱི་མཇུག་ཆར། ཀྱེ་རྡོར་འབུམ་ལྔ་དང་དུས་འཁོར་གཞུང་དབར་གྲུབ་མཐའི་འབྲེལ་བ་ཡོད་པའི་དཔེ་མཚོན་དང་། ཀྱེ་རྡོར་རྒྱུད་དང་ཀྱེ་རྡོར་འབུམ་ལྔའི་ཁྱད་པར་རྣམས་གསལ་ཡོད།

ཨེ་ཝཾ་ཞེས་པ་གཅིག་དང་གཉིས་དང་དུ་མའི་དོན་དུ་འཇུག་ཚུལ། ༡༢༧ - ༡༣༣

རྩོམ་འདིར་ 'འདི་སྐད་བདག་གི་ཐོས་པ་དུས་གཅིག་ན།' ཞེས་པའི་ཚིག་གི་གསལ་བཤད་བྱ་རྒྱུར་འབད་ཡོད། བརྗོད་ལུགས་འདི་ནི་གསང་སྔགས་ཙམ་མ་ཟད་རྒྱ་གཞུང་པཱ་ལི་དང་ལེགས་སྦྱར་གྱི་གཞུང་སྣ་ཚོགས་རྣམས་སུ་ཡང་བྱུང་ཡོད། ཚིག་འདིའི་གསུང་རབ་རྣམས་སུ་དོན་གསུམ་ལ་འཇུག་ཡོད་པ་སྟེ། རྣམ་པ་དང་། དཔེ་མཚོན་དང་། གོ་རྟོགས་རྣམས་སོ། །དེ་ནི་སྤྱི་ཚོགས་དང་མཐུན་བསྒྲིལ་དགོས་པའི་ཚུལ་སོགས་ནང་པའི་ལྟ་ཚུལ་ཞིག་ཀྱང་ཡིན།

སྔགས་ཀྱི་དམ་ཚིག ༡༣༣ - ༡༨༣

རྩོམ་འདི་ནང་སྔགས་ཀྱི་དམ་ཚིག་གལ་ཆེ་ཡིན་སྐོར་གསལ་བཤད་ཞུས་ཡོད། དམ་ཚིག་ནི་དངོས་གྲུབ་ཐམས་ཅད་འབྱུང་བའི་རྟེན་ཡིན་ལ། སྡོམ་པ་དང་དམ་ཚིག་འདི་རང་འཕྲིན་ལས་སོགས་རྒྱས་པ་དང་མཐར་སེམས་ཅན་ཐམས་ཅད་ཀྱི་དོན་དུ་འཚང་རྒྱ་བའི་

རྒྱ་ཡང་ཡིན། རྡོ་རྗེ་སློབ་དཔོན་གྱི་གདམས་ངག་དང་དམ་ཚིག་ལེགས་པར་བསྲུང་ན་དངོས་གྲུབ་ཐོབ་པའི་བགེགས་མཐའ་དག་ཞི་བར་འགྱུར་བ་ཡིན། སྔོན་གྱི་སློབ་དཔོན་རྣམས་ཀྱི་དམ་ཚིག་མེད་ན་དངོས་གྲུབ་མེད་ཅེས་གསུངས་པ་ནི་དོན་ལྡན་ཡིན། སློམ་པ་དང་དམ་ཚིག་ལེགས་པར་བསྲུང་པའི་ཐོག་བསྐྱེད་རྫོགས་ཀྱི་རིམ་པ་ཐམས་ཅད་ཡོངས་སུ་སྒྲུབ་ནུས། རྡོ་རྗེ་སློབ་དཔོན་གྱི་གདམས་ངག་དང་དམ་ཚིག་ལེགས་པར་བསྲུང་བས་རང་གི་མི་ཚེ་དོན་ལྡན་དུ་འགྱུར་ངེས་ལ། སེམས་ཅན་ཐམས་ཅད་ཀྱི་ཕན་བདེ་ཡང་འདི་ཡིས་སྒྲུབ་པ་ཡིན་ནོ།

## རྒྱུད་ཆེན་དཔའ་བོ་གཅིག་སྒྲུབ། ༡༩༣ - ༡༦༦

འདོན་ཐེངས་འདི་ནང་རྒྱུད་ཆེན་དཔའ་བོ་གཅིག་སྒྲུབ་ཀྱི་མ་དཔེ་འདྲ་མིན་གསུམ་གྱི་པར་ཚ་བསྡུར་བ་དང་ཆབས་ཅིག་བོད་ཡིག་པར་རྩ་ལ་བརྟེན་ནས་ཞུ་སྒྲིག་གིས་པར་འདེབས་ཞུས་ཡོད། གཞུང་འདི་ནང་གཟུང་སྔགས་ལྔ་བཅུ་ལྷག་གི་སྒྲུབ་ཐབས་དང་གྲངས་བཀླས་ངེས་པ་ལ་བརྟེན་ནས་ཐོབ་པའི་དངོས་གྲུབ་སྐོར་ཡང་གསལ་བཤད་བྱས་ཡོད། འདིའི་བོད་འགྱུར་བཀའ་འགྱུར་ 'ཧ་ཧ་ཀུ' ༥༩༩ ནང་ཐོབ་ཀྱི་ཡོད།

## ABSTRACTS OF ARTICLES

*The Varṇārhavarṇa Buddhastotra* 1-8

As foretold we publish in this issue fifth and sixth hymns of the *Varṇārhavarṇa Buddhastotra*, a composition of Śrī Mātṛceṭa. Attempt has been made to restore the missing parts in original Sanskrit with the help of Tibetan translation. Such emendations are placed in brackets.

*Introduction of Rare Texts* 9-24

We have introduced eight rare works in this issue, viz.

1. *Dhāraṇī-mantra-saṁgraha*
2. *Pratisarākalpa-dhāraṇī*
3. *Mahograheruka-sādhanapūjā-vidhi*
4. *Jñānolkāhoma-kārikā*
5. *Maṇḍalāvalī*
6. *Amṛtīkaraṇa*
7. *Sarvaḍākinī-rahasya*
8. *Aṣṭapīṭha-pūjāvidhi*

*Introduction of Buddhist Tāntric Literature* 25-40

(Sarvatathāgata-tattva-saṁgraha and Durgati-pariśodhana-tantra)

A number of esoteric works bearing on different categories of Tantra have been introduced in previous issues. The present issue opens description of the major theme of Yoga Tantra, its principles and modalities, drawing substantially on *Sarvatathāgata-tattva-saṁgraha and Sarva-durgati-pariśodhana-tantra.*

*Sacrament of Taking Refuge in the Triple Gem* 41-56

The significance of *Triśaraṇa-gamana*, or taking refuge in the Triple Gem, is enhanced as this sacrament alone seems to survive the fervour of the Buddhist litany. But the problem with it is that its true nature is grossly misunderstood along with the method of instruction and the scope of the vow which is known to very few. This problem has become so acute that doubts assail in the minds of many if the Buddhist order will have laity as a class by itself after a time.

The present essay focuses on as many as fifteen aspects of taking refuge in the Triple Gem as elaborated by Dīpaṁkara Śrījñāna, who had critically analysed the sacrament in its meaningful practice as found in the Āgamic literature, and the Śrāvakayāna, Mahāyāna and Vajrayāna systems.

*A critical Appraisal of Abhidhārmic Literature* *57-64*

Abhidharma is the *medius* of Buddhist thought. From it have nucleated its various systems of philosophy. In the form of *Abhidharma Piṭaka* it is venerated as Buddha-Vacana, a codex of Buddhist ontology. It reflects the reality of the empirical and transcendental worlds the knowledge of which leads to eradication of ignorance and attainment of *Nirvāṇa*. The Abhidhārmika texts are contemplated as canonical and spiritual in essence.

Thinkers in the west are deeply immersed in investigating the *Mind* in its multilayer strata, but their conclusions are hypothetical. On the opposite Buddhist Abhidharma teaches the subtlest action of mind not limited to phenomena but the entire supra-mundane participate. Perceiving the world's transient nature and believing in trans-psychosis it involves all pluralities and integrating vision mind's. The author has prepared a brief synopsis of the subject.

*Source Material of Rare Texts* *65-95*

We published a list of 63 *mss* in the twenty-second issue of this *Review*; presently, we bring forth the list of 82 Buddhist *mss* of the dhāraṇī class.

*Brief Description of Niṣpanna-Krama In Hevajra-Prakāśa* *96-112*

A brief description of Niṣpanna-krama is elicited as occurs in the *Hevajra Prakāśa* of Śrī Rāhulaguptapāda. The author resorting to the Utpanna and Niṣpanna orders after the Mūla Hevajra Tantra practices calls it *Śrī Hevajra-Sādhana*. But of the two kramas only Utpanna-krama is available in Sanskrit according to which the Hevajra practices are divided into 32 parts, known as *Sādhana-sūtra*.

In Tibetan *Tan-gyur* both the kramas are found, of which the latter is designated as Vajrajapa, Svādhiṣṭhāna, Viśuddhi and Utthāna-Krama. The scripture lays down yogic practices of the art of exoricism and asceticism.

**कालचक्र वाङ्मय का उद्भव** *113-126*

इस लेख में कालचक्र वाङ्मय के जिन प्रारम्भिक ग्रन्थों के स्वरूप और विषय का अध्ययन प्रस्तुत किया गया है उनमें वज्रपाणि की 'लघुतन्त्र-टीका', वज्रगर्भ की 'हेवज्रतन्त्र-पिण्डार्थ टीका' और पुण्डरीक की 'विमलप्रभा' ग्रन्थ मुख्य हैं । लेख के प्रथम भाग में लघु कालचक्र तन्त्र में दिए गए विषय-वस्तु सम्बन्धी कुछ पद्यांश, जिनका यथावत् उद्धरण 'विमलप्रभा' के 'परमाक्षरज्ञानसिद्धि' नामक एक प्रकरण में मिलता है, संकलित हैं ।

इसके उपरान्त 'चक्रसंवर-तन्त्र' के प्रारम्भ के दस पद्य और एक अर्द्धाली के अनुवाद सहित मूल पाठ का वज्रपाणि की टीका के साथ संकलन मिलता है । लेख के अन्तिम भाग में 'पञ्चलक्षहेवज्र' तथा 'कालचक्र' के सिद्धान्त और उपदेश पक्षों के अन्तःसम्बन्धों पर विचार किया गया है । जहाँ 'हेवज्रतन्त्र' और 'पञ्चलक्ष हेवज्र' के बीच पाठभेदादि एवं अन्य अन्तर पाए जाते हैं उनका भी निर्देश यहाँ किया गया है ।

**'एवम्' से नानात्व, द्वयीभाव और अद्वय की अभिव्यक्ति** *127-132*

इस लेख में 'एवम्' शब्द का महत्त्व बतलाया गया है । जैसा कि इस आर्ष उक्ति 'एवम् मया श्रुतम्' से विदित है इस उक्ति का मूल पालि भाषा में मिलता है और संस्कृत के विविध ग्रन्थों एवं तन्त्र साहित्य के अवान्तर प्रकीर्ण ग्रन्थों में भी इसका बहुशः प्रयोग देखा जाता है । बुद्ध-वचन में इस शब्द का व्यवहार तीन क्षेत्रों या अध्ययन-सरणियों में दिखाई देता है, यथा—

(क) आकर (साविधिक प्रवचन या उपदेश);

(ख) निदर्शन (प्रतीक एवं दृष्टान्त) एवं

(ग) अवधारण (चित्तोत्पाद) ।

बौद्ध सामाजिक अभिनिवेश में 'एवम्' सम्भूय-समुत्थान (जनहित) के व्यापक अर्थ में प्रयुक्त हुआ है ।

**तन्त्र समय** *133-142*

इस निबन्ध में तान्त्रिक 'समय' के महत्त्व को स्पष्ट किया गया है, जो साधना का एक आवश्यक अंग है । तन्त्रानुसार 'समय' वह शिला है जिस पर समस्त ऊर्ध्व चेतन शक्तियाँ

स्थापित हैं । वहीं से उनका विकास होता है जो क्रमशः उन सभी अवस्थाओं के बीच से साधक को सिद्धि तक ले जाता है और अन्त में उसे सर्वज्ञता तक ले जाता है, जिससे प्राणियों का महान् मंगल सम्भव है । वज्र गुरुओं की देशनायें और 'समय' साधक की आध्यात्मिक सिद्धि-अवाप्ति के मार्ग में आने वाली सारी बाधाओं को दूर कर देता है । पूर्वाचार्यों ने यथार्थ घोषित किया है कि ऐसी साधना के द्वारा सिद्धि तक पहुँचने का यह एक मात्र उपाय है । उनका यह कथन "समय नहीं तो, सिद्धियाँ नहीं" बिल्कुल यथार्थ है । इसका तात्पर्य यही है कि अगर आप 'समय' पर विशेष ध्यान नहीं देंगे तो आध्यात्मिक उपलब्धि के लिये कोई मार्ग नहीं बनेगा । संवर और समय का समुचित पालन और उनकी साधना से उत्पन्नक्रम की अवाप्ति होती है और बुद्धत्व के लिये निष्पन्नक्रम का मार्ग बनता है । वज्रगुरु के द्वारा निर्देशित देशनाओं को यथासाध्य यथावत् पालन करने से अपना जीवन तो उदात्त होता ही है, और साथ ही संसार के समस्त प्राणियों का मंगल भी होता है ।

*Siddhaikavīra-Mahātantram* *143-166*

We publish here the *Siddhaikavīra-Mahātantram*. It is restituted by collating three different mss and the Tibetan text. The work consists of the practices of over 50 *dhāraṇī* mantras which produce miraculous results. The text is preserved in the Tibetan *Kanjur* (Toh. 544).

•

